# विभाषासूत्रार्थविमर्शः

डा. भारती मदनमोहनः
शोधसहायिका
विद्वान् एन्. रङ्गनाथशोधसंस्थानम्
बेङ्गलूरु

'गौः' इत्यस्माच्छब्दात् सास्नादिमत्पदार्थं लोको बुध्यते । 'गवित्ययमाह' इति 'इति'शब्दसमभिव्याहारे तु सति गोशब्दस्वरूपमेवार्थं प्रत्येति । इतिशब्दस्य पदार्थविपर्यासकृत्त्वादयं व्यत्यासः । तथा च लोके अर्थप्रधानः शब्दः । तस्यैव शब्दस्य शब्दपरत्वमितिशब्दसमवधानलभ्यम्। शास्त्रे तु 'स्वं **रूपं शब्दस्याशब्दसंज्ञा**[1]' इति पाणिनिना परिभाषणात् शब्दपरत्वमौत्सर्गिकम् । अर्थपरत्वम् इतिशब्दसमभिव्याहार रूपयत्नसाध्यम् ।

प्रकृते सूत्रार्थवर्णनक्रमः मतभेदेन भिद्यते । तथा हि – इतिशब्दस्य शब्दार्थविपर्यासकृतः काकाक्षिगोलन्यायेन उभाभ्यां सम्बन्धेन संज्ञासंज्ञिनोरुभयोरप्यर्थवाचित्वम् । ततश्च नवाशब्दार्थस्य संज्ञिनः (निषेधविकल्परूपार्थस्य) विभाषापदार्थः तत्पर्यायः (वा अन्यतरस्यामित्यादिः) संज्ञा इति सूत्रार्थः कैयट-दीक्षितयोर्मते पर्यवसितः।

नागेशमते अर्थपदार्थकत्वकृत् इतिकरणः न-वा-शब्दाभ्यां प्रत्येकं सम्बध्यते । तेन नवाशब्दार्थयोः संज्ञित्वं, विभाषाशब्दस्य च संज्ञात्वम् । तेन निषेधविकल्पयोरर्थयोः विभाषाशब्दः संज्ञा इति सूत्रार्थः सिध्यति ।

अत्र दीक्षितनागेशभट्टयोः मतभेदविचारद्वयं परिलक्ष्यते -

1. पदार्थविपर्यासकृतः इतिकरणस्य काकाक्षिन्यायेन नवाशब्दाभ्याम् उभाभ्यां सम्बन्धात् अर्थ एवेह संज्ञी संज्ञा च । तेन विभाषापर्यायाणां वादिशब्दानामपि निषेधविकल्पार्थकत्वम् इति दीक्षिताः । एकस्य संज्ञिनः अनेकसंज्ञाकरणस्य शास्त्रेऽदर्शनात् 'अनाकृतिः संज्ञा' इति वृद्धिसंज्ञासत्रस्थभाष्यविरोधाच्च इदं न युक्तमिति नागेभट्टाः ।

---

[1] अष्टा. १/१/६८

2. आकृतिपक्षे समुदाये सकृल्लक्षणं प्रवर्तते इति पक्षे इदं सूत्रम् इति दीक्षिताः । व्यक्तिपक्षे एव शास्त्रस्य सकलव्यक्तिविषयकता न जातिपक्षे इत्यत्र प्रमाणाभावात्, प्रत्युत न ब्राह्मणं हन्यात् इत्यादौ जातिपक्षे एव सर्वव्यक्तिविषयताया दृष्टत्वाच्च इदमप्ययुक्तमिति नागेशभट्टाः ।

**दीक्षितमतम्**

उभयत्रविभाषार्थमिदं सूत्रमारभ्यत इत्यंशे तु न कस्यचिद्विमतिः । कैयटोपाध्यायानां दीक्षितानां च आशयः समानः प्रतिभाति, प्रदीपस्थ एव विषयः दीक्षितैरऽप्यनूदितः । तत्रादौ शब्दकौस्तुभे आद्ये मतभेदस्य विषये –

सूत्रस्थः इतिशब्दः काकाक्षिगोलन्यायेन संज्ञिबोधकेन ‘न वा’ इत्यनेन संज्ञाबोधकेन ‘विभाषा’ इत्यनेन चांशेन सम्बध्यते । तस्य च इतेः पदार्थविपर्यासकृत्त्वात् शास्त्रे उत्सर्गतः शब्दपदार्थकस्य अर्थपदार्थकत्वमातनोति । ततश्च अत्र सूत्रे अर्थ एव संज्ञी संज्ञा च । एवञ्च निषेधविकल्पयोः विकल्पसंज्ञा स्यात् इत्यर्थः अस्मात् सूत्रान्निर्गलितः । संज्ञाकोटावपि अर्थस्यैव परिग्रहात् विकल्पसंज्ञा इत्यर्थो लब्धः । एवञ्च इह शास्त्रे यत्र यत्र विकल्पार्थकः शब्दः समुपलभ्यते तत्र सर्वत्रापि निषेधविकल्पौ तदर्थत्वेन ज्ञेयौ इत्यर्थः । न च निषेधविकल्पयोरर्थयोः अपदार्थतया (विकल्पशब्दार्थत्वाभावात्) अनन्वयप्रसङ्गः शङ्क्यः; एतत्सूत्रारम्भसामर्थ्यादेव विधिवाक्येषु विकल्पवाचिपदस्य ‘वा’ ‘अन्यतरस्याम्’ इत्यादेः लाक्षणिकत्वस्वीकारात् । द्वितीये च –

अत्राप्यंशे दीक्षिताः कैयटोक्तमेवार्थमन्ववादिषुः । आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते इति दर्शने इदं सूत्रमारभ्यते । यदा तु व्यक्तिपक्षमाश्रित्य प्रतिलक्ष्यं लक्षणोपप्लवेन ‘विभाषा श्वेः’ इत्येतद्भिद्यते, तदा क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन च प्रवृत्तिसम्भवान्नेदं सूत्रमारभणीयम् । तदुक्तं वार्तिककारैः – “अशिष्यो वा विदितत्वात्” इति । वस्तुतस्तु आकृतिपक्षेऽपि उभयत्रविभाषास्थलेषु (विधिप्रदेशेष्वेव) ‘न वा श्वेः’ इत्यादि पठित्वा इदं सूत्रं प्रत्याख्यातुं शक्यम् इत्ययं दीक्षितानामाशयः । निरूपितं चैतत् तैरेव अस्मिन् सूत्रे कौस्तुभे[1] ।

---

[1] श. कौ. पृ. सं. १८४

**नागेशमतम्**

प्रकृतसूत्रे च शेखरे[1] च नागेशभट्टाः प्रथमे –

लोके प्रयुज्यमानः इतिशब्दः अर्थपदार्थकस्य शब्दस्य शब्दपदार्थकत्वं करोति । तच्च 'गवित्ययमाह' इत्यादौ अनुकरणे स्पष्टम् । इह व्याकरणे तु 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रेण शब्दस्य स्वं रूपम् (आनुपूर्वी) एव संज्ञी इति विशेषतः परिभाषणात् उत्सर्गतः शब्दपदार्थकस्य शब्दस्य अर्थपदार्थकत्वकृत् इतिकरणः । इतिशब्दस्य च अनुवादव्यतिरिक्तेषु वाक्येष्वेव पदार्थविपर्यासकृत्त्वं, न तु सर्वत्र । स चायमितिकरणः न-वाशब्दाभ्यां प्रत्येकं सम्बध्नाति । तेन नवाशब्दयोरर्थौ संज्ञिनौ, विभाषाशब्दश्च संज्ञा इति लब्धम् । शास्त्रे शब्दपदार्थकृत्त्वकृतः 'स्वं रूप'मिति सूत्रस्य प्रत्याख्यानपक्षे तु सूत्रे इतिशब्दः चिन्त्यप्रयोजन एव, अर्थे कार्यस्याबाधात् । नन्वस्तु शब्दयोरेव संज्ञित्वमिति चेन्न, एवं तर्हि 'विभाषा श्वेः' इत्यादिविधिप्रदेशेषु 'न वा' शब्दयोरेवादेशप्रसङ्गात् इत्याहुः । द्वैतीयीके च विचारे तत्रैव –

भाष्ये तु सर्वत्र विभाषापदेनैव सूत्रकृता व्यवहृतत्वाभावेन, एवं हि (सूत्रारम्भे) ह्रक्रोरन्यतरस्याम् इत्यादौ अनुपपत्तिराशङ्किता । ननु 'इति' शब्दं संज्ञाकोटावपि सम्बन्ध्य विभाषापदार्थः नवाशब्दार्थयोः संज्ञा इत्युच्यताम् । तथा सति ह्रक्रोरन्यतरस्याम् इत्यादावनुपपत्तिवारणात् इति चेन्न, एकस्यार्थस्य समानफलकानेकसंज्ञाकरणस्य 'अनाकृतिः संज्ञा' इति वृद्धिसंज्ञासूत्रस्थभाष्येण[2] तिरस्कारात् । तथा हि तत्र वृद्धिशब्दः एकत्वात् संज्ञा, लाघवार्थत्वात् संज्ञाकरणस्य । एवञ्च अनेकस्यैका संज्ञा क्रियते, न त्वेकस्यानेका प्रयोजनाभावात् इत्यतः वृद्धिशब्दः संज्ञा, आदैचश्च संज्ञिनः इत्येवं संज्ञासंज्ञिविनिर्णयो जायते इत्युक्तम् । एवञ्च एतावता ह्रक्रोरन्यतरस्याम् इत्यादौ व्यवस्था न सिद्ध्यति । तदर्थं च लक्ष्यानुरोधेनैव क्वचिद्विधिमुखेन प्रवृत्तिः, क्वचिच्च निषेधमुखेनेत्येवम् उभयमुखेन प्रवृत्तिर्वाच्या । तथा च सत्यपि सूत्रारम्भे ह्रक्रोरन्यतरस्यामित्यादिसङ्ग्रहाय उभयमुखेन प्रवृत्तेर्वाच्यत्वे,

---

[1] लघु. शे. १४८

[2] महा. भा. वृद्धिरादैच् - ॥अनाकृतिः॥ अथवा अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते । पृ. सं. १५८

विभाषापदघटितेऽपि लक्ष्यानुसारेणैव उभयत्रविभाषास्थलेषु उभयमुखेन प्रवृत्तेर्वक्तुं शक्यत्वात् सूत्रारम्भो व्यर्थ इत्यभिप्रायेण भाष्यकारा जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः ।

**विमर्शः**

- अत्रायं विम्रष्टव्यः अंशः – **'अशिष्यो वा विदितत्वात्'** इति खल्वाह प्रत्याख्यानभाष्ये भगवान् भाष्यकारः । तत्रत्ये **'वा'** शब्दे निहितं किञ्चित् स्वारस्यम् । तथा च तत्सूत्रस्थभाष्यसरण्याः परिशीलनेन ततः प्राक् चर्चितानां विषयाणां च अवलोकनेन इदं संलक्ष्यते यत् सूत्रस्यास्य प्रत्याख्यानवार्ता इतः प्राक् सुतरामनुपक्रान्ता इति । पूर्वं कञ्चन विषयम् अंशतः प्रतिपाद्य तत्रार्थे वैकल्पिकत्वप्रदर्शनपुरःसरम् उपायान्तराविष्करणे हि युज्यते 'वा' शब्दप्रयोगः । तथैव च भाष्यकाराणामपि शैली परिदृष्टा इतरत्र[1] । एवञ्च अत्र सूत्रे तथाविधप्रत्याख्यानविचारस्य कस्यापि अनुपक्रान्तत्वात् "अशिष्यो वा विदितत्वात्" इत्यत्रत्यवाशब्दस्वारस्येन प्रत्याख्यानं पक्षे एव, न तु सर्वांशेन इत्येतत् स्पष्टं लभ्यते । किञ्च भाष्यकारैरपि तद्वार्तिकव्याख्यावसरे 'वा' शब्दं निवेश्य **"अशिष्यो <u>वा</u> पुनरयं योगः"** इत्येवं वाशब्दं निवेश्यैव अनुवादः कृतः । यद्येतत्सूत्रस्य सर्वथा प्रत्याख्याने एव भाष्यकृतस्तात्पर्यं स्यात् तर्हि स वाशब्दं हित्वैव अन्ववदिष्यत् – 'अशिष्यः पुनरयं योगः' इति । अतोऽपि हेतोः प्रत्याख्यानस्य पाक्षिकत्वं लभ्यते इत्येतत् सुस्फुटम् । एवञ्च वाशब्दोऽयं विकल्पे । तेन आकृतिपक्षे समुदाये सकृल्लक्षणं प्रवर्तते इति दर्शने उभयत्रविभाषार्थमिदं सूत्रं कर्तव्यमेव । व्यक्तिपक्षे तु पूर्वोक्तरीत्या लक्ष्यभेदेन लक्षणभेदात् उभयमुखेन प्रवृत्त्यैव इष्टसिद्धेः सूत्रं न कर्तव्यमित्येव भाष्याशयः इति भाति ।
- किञ्च नागेशभट्टाः प्रकृतसूत्रे उद्योते[2] "परे तु" इत्युपक्रम्य स्वाशयं विशदीचक्रुः । तस्यायमर्थः -जातिपक्षे सूत्रमारम्भणीयं, न व्यक्तिपक्षे इति कैयटदीक्षिताद्यभिहिते मते न तेषां सम्मतिरस्ति । आश्रीयमाणेऽपि जातिपक्षे सूत्रस्य जात्याश्रयसकलव्यक्तिविषयकत्वस्य वक्तुम् अशक्यत्वात्, जातिपक्षे यत्किञ्चिद्व्यक्तिविषयकताया 'न ब्राह्मणं हन्यात्' इत्यादिभाष्योदाहरणविरोधेन वक्तुमशक्यत्वाच्च,

---

[1] महा. भा. वृद्धिरादैच् पृ. सं. १५९ । <u>अनाकृतिः</u> संज्ञा इत्येकं समाधिमुपवर्ण्य उपायान्तरमुपक्रमितुं तस्य वैकल्पिकत्वद्योतनाय चाह – <u>लिङ्गेन वा</u> इति ।

[2] उद्योतः पृ. सं. ३८०

सूत्रमारभ्यापि क्वचिद्विधिमुखेन क्वन्निषेधमुखेन इत्येवमुभयमुखेन प्रवृत्तेरवश्यवक्तव्यतापत्त्या, व्यक्तिपक्षेऽपि तादृशोभयमुखेन प्रवृत्तेस्तुल्यत्वात्, व्यक्तिपक्षे च सूत्रस्याप्यनारम्भणीयत्वेन लाघवाच्च तदेव युक्तमिति तेषामाशयः उन्नेतुं शक्यः । इत्थञ्च व्यक्तिपक्ष एव आश्रीयते, तत्पक्षे च सूत्रारम्भे अनारम्भे वा न किञ्चित् फलमिति सूत्रं नारम्भणीयमिति च नागेशाशयः फलितः । किन्तु अत्र अवधेयाः अमी अंशाः –

- ❖ 'न वेति विभाषा' इति सूत्रमारभमाणस्य भगवतः पाणिनेरपि हृदयमवबोद्धुमस्माभिः यतनीयम् । यस्य पक्षस्य (व्यक्तिपक्षस्य) आश्रयणेन सूत्रारम्भ एव व्यर्थतामियात्, तमेव पक्षमाश्रित्य सूत्रकारः सूत्रमारभते किम्? अतः सति सूत्रे सूत्रकृन्मतेऽप्युपपत्तिरवश्यं प्रदर्शनीया, व्यवस्था च विधेया । अतः जातिपक्षे आश्रिते सूत्रस्य सार्थक्यं, व्यक्तिपक्षे च अनारभ्यत्वमिति पूर्वाचार्योक्तमेव युक्तियुक्तं प्रतिभासते ।
- ❖ अपि च यदपि तैः '**नाद्यः**' इत्येवं जातिपक्षे तज्जात्याश्रयसकलव्यक्तिविषयकत्वं न सम्भवति, नपदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वादित्युक्तम्, तत्रेदं चिन्त्यते – नपदघटितवाक्येन बोध्यते योऽर्थः (न भवति इत्येवंरूपः) , न तावन्मात्रबोधनेन सूत्रव्यापारः समाप्तः । यस्मिंश्च सति जातिपक्षे तज्जात्याश्रयसकलव्यक्तिविषयकता अपलपितुं शक्येत। नपदघटितवाक्येन च सूत्रस्य एक एव अंशो बोधितः केवलम् । तेन वाक्येन लिङ्गजातौ निषेधप्राप्तियोग्येषु कित्सु तद्बोधनेन (असम्भवादेव च नपदघटितवाक्यार्थः पित्सु न प्रवर्तते) किदकिद्रूपायां सर्वस्यामपि लिङ्गजातौ ऐकरूप्यं प्रापितायां सत्यां परस्तात् वापदघटितवाक्येन बोध्यते योऽर्थः (भवति न भवति इत्येवंरूपः) तस्य लिङ्गजात्याश्रयसकलव्यक्तिषु प्रवृत्त्या विकल्पसिद्धिः इत्येतावत्पर्यन्तं सूत्रस्य व्यापारः। वापदघटितवाक्यार्थबोधनोत्तरमेव च सूत्रस्य व्यापारोऽवसितः । सूत्रे च 'न वा' शब्दार्थौ द्वावपि सम्भूयैव हि विभाषाशब्दस्य संज्ञिनौ भवतः । नत्वेकतरमात्रं, न वा पृथक् । अतः एकतरांशप्रवृत्तिवेलायां जातिपक्षे सूत्रस्य सकलव्यक्तिविषयकता नास्ति इति कथनं न सर्वथा युक्तिसहम् इति प्रतिभाति ।

- ➢ किञ्च एकस्यार्थस्य समानफलकानेकसंज्ञाकरणस्य 'अनाकृतिः संज्ञा' इति वृद्धिसंज्ञासूत्रस्थभाष्येण तिरस्कारात् विभाषापदार्थः संज्ञा इति वा अर्थाक्षिप्तशब्दमात्रं संज्ञेति वा अयुक्तमिति यदुक्तं तत्र विमृश्यते –

'अनाकृतिः संज्ञा' इति वृद्धिसूत्रस्थभाष्यप्रसङ्गस्य प्रकृतसूत्रस्थप्रसङ्गस्य च विद्यते वैषम्यम् । तथा हि संज्ञासूत्रेषु प्रायः सर्वत्र (अदेङ् गुणः, क्तक्तवतू निष्ठा इत्यादौ) संज्ञिनः प्रथमं निर्देशेन, संज्ञायाश्च तदुत्तरं निर्देशेन, संज्ञ्यनुवादेन संज्ञा विधीयते इत्यवबोधात्, वृद्धिसंज्ञासूत्रस्य च अतथात्वात् कः संज्ञी? का च संज्ञा? इति संशये समुपस्थिते आद्यः समाधिरुक्तः आचार्याचारादिति । ततः इदं समाधानमुक्तम् - "अनाकृतिः" इति । "अथवा अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि हि आकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते[1]" इति हि तत्र भाष्यम् । तेनायमर्थो लभ्यते इति कैयटः – *"वृद्धिशब्दः एकत्वात् संज्ञा, आदैचां बहुत्वात् संज्ञित्वम् । लाघवार्थं संज्ञाकरणम् । यथा 'सर्वादीनि सर्वनामानि' इत्यनेकस्यैका संज्ञा क्रियते । न त्वेकस्यानेका प्रयोजनाभावात् ।[2]"* इति । एवञ्च प्रयोजनाभावे एकस्य अनेकाः संज्ञाः न क्रियन्ते, लाघवार्थत्वात् संज्ञाकरणस्य । अतः न आदैचः संज्ञा । सति तु प्रयोजने कृत्कृत्यप्रत्ययसंज्ञाः एकस्यैव तव्यादेः क्रियन्त एव इत्येव भाष्यतात्पर्यम् । प्रकृते च वा अन्यतरस्याम् इत्यादेरपि निषेधविकल्पार्थबोधकत्वे अस्त्येव प्रयोजनं हृक्रोरन्यतरस्याम् इत्यादौ उभयत्रविभाषास्थले व्यवस्थाविधानरूपम्।

अपि च आदैज्रूपमर्थं (संज्ञिनं) बुबोधयिषुः वृद्धिरित्येकयैव संज्ञया सूत्रकारः सर्वत्रापि व्यवजहार, न तु तत्समानार्थकैः समृद्धि-अभिवृद्ध्यादिभिरपि शब्दैस्तान्निर्दिदेश क्वापि । इह तु विभाषास्थले विकल्परूपमेकमेवार्थं प्रत्याययितुकामः सः 'विभाषा' 'वा' 'अन्यतरस्याम्' इत्यादिभिः बहुभिः शब्दैः विकल्पं व्यपदिदेश, यत्र सर्वत्रापि निषेधविकल्परूपौ अर्थौ संज्ञित्वेन इष्टौ इत्यपि व्यत्यासः ज्ञेयः।

किञ्च लाघवेन सर्वत्र सूत्रे 'वा' इत्येव वक्तव्ये गुरुभूततन्निर्देशानामर्थैक्ये शब्दकृतगौरवानादरज्ञापकत्वेन (पर्यायपदेषु गौरवलाघवविचारो नास्ति इति) एकस्यानेकसंज्ञाकरणेऽपि फलैक्याभावात् समानफलकानेकसंज्ञाकरणमेव प्रकृते नास्ति, यस्मिन् सति पूर्वोक्तभाष्येण सह विरोधः आपत्तित्वेन दातुं शक्येत । तस्माद् इतिशब्दस्य संज्ञासंज्ञिभ्यामुभाभ्यामपि सम्बन्धेन उभयत्राप्यर्थस्य परिग्रहात् नवाशब्दार्थं संज्ञिनमुद्दिश्य विभाषाशब्दार्थः (विकल्पः) संज्ञात्वेन विधीयते इति, फलिततया

---

[1] महा. भा. वृद्धिरादैच् (१/१/१) पृ. सं. १५८

[2] प्रदीपः वृद्धिरादैच् पृ. सं. १५८

अर्थाक्षिप्तशब्दमात्रं संज्ञा इति च कैयटप्रदर्शितया दीक्षितानुसृतया च रीत्या सूत्रस्यास्य व्याख्यानमेव युक्तमिति प्रतिभाति ।

- अपि च कैयटदीक्षिताद्यादृतेन मतेन इतिशब्दस्योभयत्रान्वये क्रियमाणे (अर्थाक्षिप्तशब्दमात्रं संज्ञा इति स्वीकारे) विकल्पार्थकपदघटितेषु सर्वेष्वपि सूत्रेषु सूत्रस्य समन्वयो जायते, सर्वेषां वा, विभाषा, अन्यतरस्याम् इत्यादेः संज्ञित्वेन सङ्ग्रहात् महल्लाघवं, सूत्रकृन्मतेऽप्युपपत्तिः सन्दर्शिता, सूत्रस्य च बह्वर्थसङ्ग्राहकतया विश्वतोमुखत्वं च साधितमिति महदौचित्यं च ।
- यत्तु स्वग्रन्थे नागेशभट्टैरुच्यते *"स्वं रूपमित्यस्य प्रत्याख्याने तु इतिशब्दो व्यर्थ एव, अर्थे कार्यस्याबाधात्"* इति, तन्न युक्तं प्रतिभाति। यतः प्रत्याख्यानं तत्रैव क्रियते यत्र तद्वचनप्रतिपाद्योऽर्थः प्रकारान्तेण संसिध्येत् । एवं च प्रकृते 'स्वं रूप'मिति सूत्रेण प्रतिपाद्यस्य शब्दसंज्ञात्वरूपस्यार्थस्य स्वतः सिद्धत्वादेव सूत्रेण अपूर्ववचनरूपेण तस्यार्थस्य वक्तव्यावश्यकता नास्तीत्याशयेन भाष्यकृता तत् प्रत्याख्यातं (राजश्वशुराद्यत् इत्यादौ तच्छब्दादुपस्थितस्य लौकिकस्य अर्थस्य बाधेऽपि तज्जन्यशाब्दबोधे प्रकारीभूय भासमानत्वेन उपस्थितस्य शब्दस्वरूपस्य त्यागे मानाभावेन शब्दसंज्ञात्वं विनैव सूत्रं सिद्धमिति हेतोः प्रत्याख्यातं) , न तु तत्प्रत्याख्यानेन सर्वत्र अर्थसंज्ञात्वमनुज्ञातुम् । एवञ्च स्वं रूपमिति सूत्रसत्त्वे तत्प्रत्याख्याने च शब्दस्यैव संज्ञात्वं, न अर्थस्य । सूत्राभावेऽपि शब्दशास्त्रे शब्दस्यैव प्राधान्यात् प्रदेशेषु विशेषणतया उपस्थितस्य च तस्य त्यागे मानाभावाच्च सूत्रं प्रत्याख्यातम् । न तावता शेखरकारोक्तरीत्या अर्थे कार्यं प्रवर्तते इति लभ्यते । एवं हि सति सूत्रसत्त्वे शब्दस्य संज्ञात्वं, सूत्राभावे च बाधकस्य तस्याभावात् अर्थस्यैव संज्ञात्वम् इत्येवम् आरम्भप्रत्याख्यानयोः फलभेदः आपतेत् । किञ्च नागेशभट्टैरपि स्वयं स्वग्रन्थे स्वं रूपमिति सूत्रप्रत्याख्यानप्रकारः इत्थमेवावादि । अतः तदनुसारेणापि तदीयः पूर्वोक्तः ग्रन्थः (स्वं रूपमित्यस्य प्रत्याख्याने इतिशब्दो व्यर्थः इति) विरुध्यत एव ।

इत्थं च अर्थाक्षिप्तशब्दमात्रसंज्ञात्वाश्रयणात् सूत्रेणैव 'वा' 'अन्यतरस्याम्' इत्यादेरपि सङ्ग्रहसम्भवेन लघुभूतत्वेन भाष्याविरुद्धत्वेन च कैयटदीक्षिताद्युक्तः पन्थाः एव अत्र साधीयान् इति प्रतिभाति ।

# ***शब्दशास्त्रे भावपदार्थविवेचनम्***

Dr. P. R. Archana Karanth

Guest Faculty, Dept. Of Vyakarana

Karnataka Sanskrit Univercity

Bengaluru

Ph no. – 9481904228

e-mail-archanakaranth6@gmail.com

जगति विद्यमानानि चराचरवस्तूनि शब्दः अर्थश्चेति द्वेधा विभज्यन्ते । तत्र अर्थप्रपञ्चस्य यावती विस्तीर्णता तावत्येव शब्दप्रपञ्चस्यापि । एकमर्थं बोधयितुमनेकाः शब्दाः प्रयुज्यन्त इति शब्दानामेवाधिकतमत्वम् । ते च शब्दाः बहुभिः प्रकारैः पृथक् क्रियन्ते । सर्वादौ लौकिकाः – वैदिकाश्चेति शब्दस्य द्वयीगतिः । लोके भवाः अथवा विदिताः लौकिकाः, वेदे भवाः वैदिकाः । उक्तं हि भाष्ये – "**अथ शब्दानुशासनम् । केषां शब्दानाम् । लौकिकानां वैदिकानाञ्च**" [1] इति । पुनश्च रूढः – यौगिकः – योगरूढश्चेति त्रिविधः शब्दः । तत्र अवयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम् । रथन्तरमित्यादौ यथा । शास्त्रकल्पितावयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम्, पाचिका – पाठिकेत्यादौ । अवयवार्थसंवलितसमुदायशक्त्यार्थबोधकत्वं योगरूढत्वं, पङ्कजमित्यत्र । केचन अत्रैव 'यौगिकरूढ' इति तुरीयमपि शब्दमुररीकृत्य, मण्डपादीन् शब्दान् तत्रोदाहरन्ति । यत्र अवयवशक्त्या समुदायशक्त्या च विभिन्नार्थबोधकत्वं तद्यौगिकरूढम् । नानार्थकोऽयं शब्द इति विशेषः । मण्डपशब्दः मण्डं पिबतीति योगशक्त्या मण्डपानकर्तृबोधकः, प्रकरणविशेषे च रूढिशक्त्या गृहविशेषबोधकः । एवमेव अश्वगन्धादयः शब्दा अप्यत्रैव ऊह्याः ।

पुनरपि शब्दाः कृदन्ताः, तद्धितान्ताः, समासाश्चेति त्रिविधाः । कारकः – औपगवः – अधिहरीति यथाक्रममुदाहरणानि । "**नामाख्यातोपसर्गनिपाताश्च**"[2] इति शब्दचातुर्विध्यं प्रादर्शि यास्केन निरुक्ताख्ये ग्रन्थे । नामपदेन सुबन्तस्य आख्यातपदेन तिङन्तस्य च ग्रहणम् ।

[1] महाभाष्यम्, पस्पशाह्निकम्

[2] निरुक्तम् १/१/१

उपगृह्याख्यातं तस्यैवार्थविशेषं सृजन्तीत्युपसर्गाः प्रादयः । उच्चावचेषु निपतन्तीति निपाताः इव, न, चिदित्यादयः । शब्दतत्त्वस्य पारमार्थिकत्वविचिकित्सायां परा, पश्यन्ती, मध्यमा, वैखरीति चतुर्विधाः शब्दाः समुपलभ्यन्ते । सत्स्वेवं शब्दवैविध्येषु प्रकृते भावाख्यः शब्दः अनुसन्धित्सितः, यश्च कृदन्तत्वेन यौगिकत्वेन च परिगण्यते ।

वाक्यस्यैव निरंशस्य वाचकत्वेऽप्यखण्डवाक्यव्युत्पत्तौ पदव्युत्पत्तिः उपायत्वेन समाश्रितः वैयाकरणैः । पुनस्तत्र पदे प्रकृति – प्रत्यय – आगमादेशान् प्रकल्प्य, अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्यययोरर्थविभागञ्चोपस्थाप्य शास्त्रममुं प्रवर्तयामासुः । प्रयुक्तानामिदमन्वाख्यानमित्यतः भगवान्पाणिनिः स्वदृष्टिपथे समायातानां शब्दानां निष्पत्तिप्रणयनाय अष्टाध्यायीनामकमपूर्वं ग्रन्थं जग्रन्थ । असंख्याकानां पदानां नियमारचनमत्यन्तं दुष्करमेव । अतः सः कञ्चनोपायं समाश्रयामास ।

सर्वादौ वाक्यस्थानि पदानि बुद्ध्या प्रविभज्य, तत्र प्रकृतिप्रत्ययविभागञ्चोपकल्प्य तदनु सुबन्त – तिङन्तभेदेन पदानि विभक्तानि । पुनः धातु – प्रातिपदिकभेदेन प्रकृतिः, कृत् – तद्धित – समासान्त – तिङ् – सुप् – स्वार्थिकभेदेन प्रत्ययाः विभक्ताः । एतेषां विभागमात्रेण शब्दनिर्वचनं न समाप्तिमेति, किञ्च प्रकृतिमात्रात् प्रत्ययकथने न सर्वेषामभीष्टानां शब्दानां सिद्धिर्भवति । एवमेवैतादृशापोद्धारेण क्वचिदसाङ्कर्यदोषोऽपि समजायेत । तस्मात् विभक्तेभ्यः एभ्यः प्रकृतिप्रत्ययेभ्यः अर्थनिर्देशनपुरःसरं निर्वचनक्रमः सुष्ठु संसाधितस्तेन । अर्थकथनपूर्वकं प्रकृतिप्रत्ययादीनां निर्देशे तेषु तेष्वर्थेषु ते ते शब्दाः सिध्यन्तीत्यतः सर्वत्रादोषः ।

पाणिनिनाष्टाध्याय्यामसंख्याकाः अर्थाः निर्दिष्टाः । यथा – कर्तृ, कर्म, करणम्, सम्पदानापादानमधिकरणानि, सम्बन्धः, अपत्यम्, समूहविकारादयः । तत्र केचन प्रकृतेरर्थाः, अपरे केचित् प्रत्ययार्थाः, अन्ये केचन उभयोरप्यर्थाः । उक्तेष्वर्थेषु भावपदार्थोऽप्यन्यतमत्वेन परिगृह्यते । भावपदार्थेऽस्ति किञ्चित् वैशिष्ट्यम् । अत्र 'भाव' इति समानानुपूर्वीमेवाश्रित्य अर्थत्रयं विभिन्नविधिविधानाय अनेकत्र स्थलेषु पाणिनिर्निजगाद । अष्टाध्याय्यामीदृशी रीतिः नान्यत्रावलोक्यते । यथा "**भावे**" [3] इति सूत्रेण भावेऽर्थे धातुसामान्यात् घञ्प्रत्ययः विहितः । तत्र भावो नाम लिङ्गसंख्याद्यन्वयरूपः सिद्धस्वभावयुक्तः धात्वर्थः । शुद्धः धात्वर्थः धातुनैवोच्यते, तस्य सिद्धता-निष्पन्नता नाम यो धर्मः द्रव्यायमाणः तस्य घञादयः वाचकाः । अत्रार्थे **'कृदभिहितो भावः द्रव्यवत्प्रकाशत'** [4] इति भाष्यं गमकम् । "**लः कर्मणि च भावे चाकर्मकेभ्यः**"[5] इति लकारविधायके शास्त्रे साध्यरूपक्रियायाः अभिधायकः सः । तदुक्तं भाष्ये – **'धात्वर्थः केवलः सुद्धो भाव इत्यभिधीयते'** इति । कौमुद्यां दीक्षितैरप्यगादि '**भावो**

[3] अ.सू. ३/३/१८

[4] म. भा. ३/१/६७

**भावना उत्पादना क्रिया'**[6] इति । ततश्चेह सूत्रे भावशब्देन फल-व्यापारयोर्ग्रहणम् । "**तस्य भावस्त्वलौ**"[7] इति त्वतल्विधायके शास्त्रे प्रकृतिजन्यबोधे प्रकारीभूतस्य धर्मस्य बोधकः भावशब्दः । यथा गोत्वमित्यत्र त्वादिप्रत्ययानां या प्रकृतिः – गोशब्दः, तज्जन्यो यो बोधः – गोपदनिष्ठशक्त्या जायमानः गोत्वविशिष्टानां गोव्यक्तीनां बोधः, तत्र बोधे यः प्रकारः - योऽर्थः विशेषणतया भासते गोत्वमित्याख्या जातिः स एव भावः त्वादि प्रत्ययेनोच्यते । एवञ्चानुपूर्व्याः सर्वत्र एकत्वेऽपि अर्थस्तु विभिन्न एव ।

तत्र सप्तविंशतिसूत्राणि भावपदघटितानि अष्टकेऽवलोक्यन्ते । तानि च –

***धात्वभिहितभावार्थपराणि सूत्राणि –***

- **उदुपधाद्भावदिकर्मणोरन्यतरस्याम्** १-२-२१ उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । भावे – मुदितम्, मोदितम् साधुना । निष्ठायाः विकल्पेन कित्वप्रतिषेधविधायके अस्मिन्शासस्त्रे, उपात्तस्य भावशब्दस्य धात्वभिहितः साध्यावस्थापन्नः अर्थः, तयोरेवेति सूत्रेण निष्ठायाः भावकर्मणोर्विधानात् । तयोरेवेत्यादि सूत्रे लः कर्मणीति सूत्रस्थभावपदस्यानुवर्तनात् तस्य च अद्रव्यायमाणार्थकत्वात् प्रकृतेऽपि सैवार्थः ।

- **भावकर्मणोः** १-३-१३ भावे कर्मणि च यः लः तस्य आत्मनेपदमित्यर्थः । भावे लः विधीयते लः कर्मणीति शास्त्रेण । ततो हेतोः इहोक्तः भावशब्दोऽपि पूर्वोक्तमेवार्थं निगदति ।

- **यस्य च भावेन भावलक्षणम्** २-३-३७ यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । प्रकृतसूत्रोपात्तौ भावशब्दौ क्रियापरौ । क्रिया च साध्यस्वभावयुक्ता । अतः साध्यावस्थः अर्थः भावशब्दव्यपदेश्यः ।

- **लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्** ३-१-२४ एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । भावोऽत्र धात्वर्थः साध्यावस्थापन्नः । तद्गता गर्हा भावगर्हा ।

- **चिण् भावकर्मणोः** ३-१-६६ भावकर्मवाचिनि तशब्दे परे च्लेः चिण् स्यात् । भावः साध्यक्रिया ।

---

[5] अ. सू. ३/४/६९

[6] सि. कौ. भावकर्मतिङ्प्रकरणम् ।

[7] अ. सू. ५/१/११९

- **भुवो भावे** ३-१-१०७ भुवः भावे क्यप् स्यात् । भावः साध्यावस्थापन्नः अर्थः ।

- **भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्** ३-४-१६ भावस्य लक्षणे गम्ये स्थादिभ्यः धातुभ्यः छन्दसि विषये तुमर्थे तोसुन्प्रत्ययो भवति । भावः साध्यस्वभावयुक्ता क्रिया ।

- **लः कर्मणि च भावे चाकर्मकेभ्यः** ३-४-६९ लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युः, अकर्मकेभ्यः भावे कर्तरि च । भावः धात्वर्थः ।

- **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च** ६-४-६२ उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्कार्यं वा स्यात् स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । भावः धात्वर्थः ।

- **विभाषा भावादिकर्मणोः** ७-२-१७ भावे आदिकर्मणि च आदितो धातोः विकल्पेन निष्ठायामिडागमो भवति । भावे – प्रस्वेदितं तेन । यद्यत्र नपुंसके भावे इति क्तः तर्हि सिद्धक्रिया । यदि निष्ठा इति क्तः तर्हि साध्यक्रिया ।

***<u>कृदभिहितभावार्थपराणि सूत्राणि -</u>***

- **तुमर्थाच्च भाववचनात्** २-३-१५ भाववचनाश्च इति सूत्रेण यो विहितः तदन्तात् चतुर्थी स्यात् । यागाय यातीति यथा । अत्र भाववचनशब्देन भाववचनाश्चेति सूत्रं लक्ष्यते । तत्र भावे इत्यधिकृत्य विहिताः घञादिप्रत्ययाः भाववचनशब्देन परिगृह्यन्ते । भावे इत्यधिकारसूत्रे भावः सिद्धावस्थापन्नः धात्वर्थः । ततश्च परम्परया अयमपि भावशब्दः तदर्थलक्ष्यकः ।

- **रुजार्थानां भाववचनानामज्वरेः** २-३-५४ भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । सिद्धावस्थापन्नः अर्थः भावशब्दग्राह्यः । अभिहितञ्च तत्त्वबोधिनीकारेण – “रुजार्थानां धातूनां भाववाचकत्वाव्यभिचारात् भावशब्देनाऽत्र घञादिवाच्यः सिद्धरूपः भावः उच्यत” इति ।[8]

- **आशिते भुवः करणभावयोः** ३-२-४५ आशितशब्दे उपपदे भवतेः करण-भाव्योः अर्थयोः खच् स्यात् । भावे – आशितस्य भवनं आशितम्भवः । वाऽसरूपविधिना

---

[8] तत्त्वबोधिनी २/३/५४

ल्युडपीत्युक्तत्वात्, ल्युडन्ततया(भवनं) विग्रहप्रदर्शनात् तस्य च सिद्धरूपार्थकत्वात् प्रकृतसूत्रेऽभिहितस्य भावशब्दस्यापि स एवार्थः ।

- **भाववचनाश्च** ३-३-११
- **भावे** ३-३-१८
- **अभिविधौ भाव इनुण्** ३-३-४४
- **भावेऽनुपसर्गस्य** ३-३-७५
- **स्थागापापचो भावे** ३-३-९५
- **व्रजयजोर्भावे क्यप्** ३-३-९८
- **नपुंसके भावे क्तः** ३-३-११४ सूत्रसप्तकेऽपि भावशब्दः सिद्धवस्थापन्नार्थपरः ।
- **श्रज्यावमकन्पापवत्सु भावे कर्मधारये** ६-२-२५ श्र-ज्य-अवम-कन् इत्येतेषु पापशब्दवति चोत्तरपदे कर्मधारयसमासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति । गमनश्रेष्ठम् । गमेः ल्युट् चेति सूत्रेण भावे ल्युट् । स च भावः सिद्धावस्थापन्नः धात्वर्थः ।
- **अनो भावकर्मवचनः** ६-२-१५० अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनञ्च कारकात्परमन्तोदात्तं स्यात् । पयः पानं सुखम् । पातेः कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् इत्यनेन भावेऽर्थे ल्युट् । भावः सिद्धक्रिया ।
- **घञि च भावकरणयोः** ६-४-२७ भावकरणवाचिनि घञि परतो रञ्जेरुपधायाः नकारस्य लोपो भवति । भावार्थे घञ्विधीयते भावे इति सूत्रेण । ततो इह सूत्रेऽभिहितः भावः सिद्धावस्थापन्नार्थपरः ।
- **वा भावकरणयोः** ८-४-१० पूर्वपदस्थान्निमित्तात्परः भावे करणार्थे च यः पानशब्दः तस्य उक्तविषये णो वा स्यात् । क्षीरपानम् – क्षीरपाणम् । पिबतेर्भावे ल्युट् । पानक्रियेत्यर्थः । सिद्धावस्थापन्नः धात्वर्थः भावः ।

***<u>तद्धिताभिहितभावार्थपराणि सूत्राणि -</u>***

- **भावे च** ४-४-१४४ भावे चार्थे छन्दसि विषये शिवादिभ्यः तातिल्प्रत्ययो भवति । शिवस्य भावः शिवतातिः । भावः प्रवृतिनिमित्तपरः ।

- **तस्य भावस्त्वतलौ** ५-१-११९ षष्ठ्यन्तात् भाव इत्यर्थे त्वतलौ स्तः । प्रकृतिजन्यबोधे प्रकारः भावः ।

- **ये चाभाव-कर्मणोः** ६-४-१६८ यकारादौ च तद्धिते अभावकर्मणोः अन् प्रकृत्या स्यात् । अभावकर्मणो किम् – राज्ञः भावः कर्म वा राज्यम् । भावः प्रवृत्तिनिमित्तम् ।

तत्र सूत्रत्रये एव अर्थविशेषः कथितः । अन्यत्र सूत्रेषु तानर्थाननूद्य कार्याणि विहितानीति विशेषः । किञ्च कानिचनसूत्राणि भावपदरहितान्यपि अनुवृत्त्यादिना तत्पदमाश्रित्य तदर्थे एव प्रवर्तन्ते । तानि यथा –

- षष्ठी चानादरे २-३-३८
- सार्वधातुके यक् ३-१-६७
- हनस्त च ३-१-१०८
- परिणाख्यायां सर्वेभ्यः ३-३२० इत्यारभ्य आक्रोशे नञ्यनिः इत्यावत् ।
- ल्युट् च ३-३-११५
- कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ३-३-११६
- तुमर्थे से-सेनसेऽसेन्.......... ३-४-९ इत्यारभ्य सृपितृदोः कसुन् ३-४-१७ इति सूत्रपर्यन्तं विद्यमानानि सूत्राणि ।
- अलं-खल्वोः प्रतिषेधयोः प्राचां क्त्वा ३-४-२४ इत्यारभ्य पर्याप्तिवचनेष्वलमर्थेषु ३-४-६६ इति पर्यन्तमभिहितानि क्त्वा-णमुल्प्रत्ययविधायकानि शास्त्राणि ।
- तयोरेव कृत्यक्तखलर्थाः ३-४-७०
- आदिकर्मणि क्तः कर्तरि च ३-४-७१
- गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३-४-७२

- आ च त्वात् ५-१-१२० इत्यारभ्य ब्रह्मणस्त्वः ५-१-१३६ इत्यन्तसूत्राणि ।

इत्थञ्च शास्त्रान्तरेऽपि विचर्चितश्चायं भावशब्दः अत्र शास्त्रे पारिभाषिकं, विभिन्नमर्थत्रयं समुपस्थापयतीति विशेषः । ते चार्थाः सूत्राणामुल्लेखनपुरःसरं संक्षेपेणेहोपदर्शिताः ।

॥ इति शम् ॥

**ग्रन्थसूची –**


1. वाक्यपदीयम् (अम्बाकर्त्रीव्याख्यासहितं)।
2. कैयटोद्योतसहितं पातञ्जलमहाभाष्यम् ।
3. न्यास-पदमञ्जरी सहिता काशिका ।
4. शब्दरत्नसहिता मनोरमा ।
5. लघुशब्देन्दुशेखरः ।
6. सिद्धान्तकौमुदी ।